.. dhanurveda ..

# ॥ धनुर्वेद ॥

### अथ धनुर्वेदः

ईश्वरोक्ताद्धनुर्वेदाद्व्यासस्यापि सुभाषितात् ।
पदान्याकृष्य रचितो ग्रन्थः संक्षेपतो मया ॥ १॥ 1714
विना शार्ङ्गधरं नान्यो धनुर्वेदार्थतत्त्ववित् ।
यतः स्वप्ने निशि प्राप्ता शिवात्तत्त्वविचारणा ॥ २॥ 1715
अतः संदेहदोलायां रोपणीयं न मानसम् ।
ग्रन्थेस्मिंश्चापचतुरैर्वीरचिन्तामणौ क्वचित् ॥ ३॥ 1716
यस्याभ्यासप्रसादेन निष्पद्यन्ते धनुर्धराः ।
जेतारः परसैन्यानां तस्याभ्यासो विधीयताम् ॥ ४॥ 1717
एकोऽपि यत्र नगरे प्रसिद्धः स्याद्धनुर्धरः ।
ततो यान्त्यरयो दूरं मृगाः सिंहगृहादिव ॥ ५॥ 1718

---

### अथ धनुर्धारणविधिः

आचार्येण धनुर्देयं ब्राह्मणे सुपरीक्षिते ।
लुब्धे धूर्ते कृतघ्ने च मन्दबुद्धौ न दीयते ॥ ६॥ 1719
ब्राह्मणाय धनुर्देयं खड्गं वै क्षत्रियाय च ।
वैश्याय दापयेत्कुन्तं गदां शूद्रस्य दापयेत् ॥ ७॥ 1720
धनुश्चक्रं च कुन्तं च खड्गं च च्छुरिका गदा ।
सप्तमं बाहुयुद्धं स्यादेवं युद्धानि सप्तधा ॥ ८॥ 1721
आचार्यः सप्तयुद्धः स्याच्चतुर्युद्धस्तु भार्गवः ।
द्वाभ्यां चैव भवेद्योध एकेन गणको भवेत् ॥ ९॥ 1722
हस्तः पुनर्वसुः पुष्यो रोहिणी चोत्तरात्रयम् ।
अनुराधाश्विनी चैव रेवती दशमी तथा ॥ १० । 1723
जन्मस्थे च तृतीये च षष्ठे वै सप्तमे तथा ।
दशमैकादशे चन्द्रे सर्वकर्माणि कारयेत् ॥ ११॥ 1724
तृतीया पञ्चमी चैव सप्तमी दशमी तथा ।
त्रयोदशी द्वादशी च तिथयस्तु शुभा मताः ॥ १२॥ 1725
सूर्यवारः शुक्रवारो गुरुवारस्तथैव च ।
एतद्वारत्रयं धन्यं प्रारम्भे शस्त्रकर्मणाम् ॥ १३॥ 1726
एभिर्दिनैस्तु शिष्याय गुरुः शस्त्राणि दापयेत् ।
संतर्प्य दानहोमाभ्यां सुरान्वेदविधानतः ॥ १४॥ 1727
ब्राह्मणान्भोजयेत्तत्र कुमारीश्चाप्यनेकशः ।
तापसानर्चयेद् भक्त्या ये चान्ये शिवयोगिनः ॥ १५॥ 1728
अन्नपानादिभिश्चैव वस्त्रालंकारभूषणैः ।
गन्धमाल्यैर्विचित्रैश्च गुरुं तत्र प्रपूजयेत् ॥ १६॥ 1729
कृतोपवासः शिष्यस्तु मृगाजिनपरिग्रहः ।
बद्धाञ्जलिपुटस्तत्र याचयेद्गुरुतो धनुः ॥ १७॥ 1730
अङ्गन्यासस्ततः कार्यः शिवोक्तः सिद्धिमिच्छता ।
आचार्येण च शिष्यस्य पापघ्नो विघ्ननाशनः ॥ १८॥ 1731
शिखास्थाने न्यसेदीशं बाहुयुग्मे च केशवम् ।
ब्रह्माणं नाभिकूपे तु जङ्घयोश्च गणाधिपम् ॥ १९॥ 1732
ॐ ह्रों शिखास्थाने शंकराय नमः ।
ॐ ह्रों बाह्वोः केशवाय नमः ।
ॐ ह्रों नाभिमध्ये ब्रह्मणे नमः ।
ॐ ह्रों जङ्घयोर्गणपतये नमः । 1733
ईदृशं कारयेन्न्यासं येन श्रेयो भविष्यति ।
अन्येऽपि दुष्टमन्त्रेण न हिंसन्ति कदाचन ॥ २० । 1734
शिष्याय मानुषं चापं धनुर्मन्त्राभिमन्त्रितम् ।
काण्डात्काण्डाभिमन्त्रेण दद्याद्वेदविधानतः ॥ २१॥ 1735
प्रथमं पुष्पवेधं च फलहीनेन पत्रिणा ।
ततः फलयुतेनैव मत्स्यवेधं च कारयेत् ॥ २२॥ 1736
मांसवेधं ततः कुर्यादेवं वेधो भवेत्रिधा ।
एतैर्वेधैः कृतैः पुंसां शराः स्युः सर्वसाधकाः ॥ २३॥ 1737
वेधने चैव मांसस्य शरपातो यदा भवेत् ।
पूर्वदिग्भागमाश्रित्य तदा स्याद्विजयी सुखी ॥ २४॥ 1738
दक्षिणे कलहो घोरो विदेशगमनं पुनः ।
पश्चिमे धनधान्यं च सर्वं चैवोत्तरे शुभम् ॥ २५॥ 1739
ऐशान्यां पतनं दुष्टं विदिशोऽन्याश्च शोभनाः ।
हर्षपुष्टिकराश्चैव सिद्धिदाः शस्त्रकर्मणि ॥ २६॥ 1740
एवं वेधत्रयं कुर्याच्छङ्खदुन्दुभिनिःस्वनैः ।
ततः प्रणम्य गुरवे धनुर्बाणान्निवेदयेत् ॥ २७॥ 1741

---

### अथ चापप्रमाणम्

प्रथमं यौगिकं चापं युद्धचापं द्वितीयकम् ।
निजबाहुबलान्मानात्किंचिदूनं शुभं धनुः ॥ २८॥ 1742
वरं प्राणाधिको धन्वी न तु प्राणाधिकं धनुः ।
धनुषा पीड्यमानस्तु धन्वी लक्ष्यं न पश्यति ॥ २९॥ 1743
अतो निजबलोन्मानं चापं स्याच्छुभकारकम् ।
देवानामुत्तमं चापं ततो न्यूनं च मानवम् ॥ ३० । 1744
अर्धपञ्चमहस्तं तु श्रेष्ठं चापं प्रकीर्तितम् ।
तद्विज्ञेयं धनुर्दिव्यं शंकरेण धृतं पुरा ॥ ३१॥ 1745
तस्मात्परशुरामेण ततो द्रोणेन धारितम् ।
द्रोणाद् गृहीतं पार्थेन ततः सात्यकिना धृतम् ॥ ३२॥ 1746
कृते युगे महादेवस्त्रेतायां चापि राघवः ।
द्वापरे द्रोणविप्रश्च दैवं चापमधारयत् ॥ ३३॥ 1747
चतुर्विंशाङ्गुलो हस्तश्चतुर्हस्तं धनुः स्मृतम् ।
तद्भवेन्मानवं चापं सर्वलक्षणसंयुतम् ॥ ३४॥ 1748

त्रिपर्व पञ्चपर्व च सप्तपर्व प्रकीर्तितम् ।
नवपर्व च कोदण्डं चतुर्धा शुभकारकम् ॥ ३५॥ 1749
चतुःपर्व च षट्पर्व अष्टपर्व विवर्जयेत् ।
केषांचिच्च भवेच्चापं वितस्तिनवसंमितम् ॥ ३६॥ 1750
अतिजीर्णमपक्वं च ज्ञातिधृष्टं तथैव च ।
दग्धं छिद्रं न कर्तव्यं बाह्याभ्यन्तरहस्तकम् ॥ ३७॥ 1751
गुणहीनं गुणाक्रान्तं काण्डदोषसमन्वितम् ।
गलग्रन्थि न कर्तव्यं तलमध्ये तथैव च ॥ ३८॥ 1752
अपक्वं भङ्गमायाति अतिजीर्णं तु कर्कशम् ।
ज्ञातिधृष्टं तु सोद्वेगं कलहो बान्धवैः सह ॥ ३९॥ 1753
दग्धेन दह्यते वेश्म छिद्रं युद्धविनाशनम् ।
बाह्ये लक्ष्यं न लभ्येत तथैवाभ्यन्तरेऽपि वा ॥ ४० । 1754
हीने तु संधिते बाणे संग्रामे भङ्गकारकम् ।
आक्रान्ते तु पुनः क्वापि न लक्ष्यं प्राप्यते दृढम् ॥ ४१॥ 1755
गलग्रन्थि तलग्रन्थि घनहानिकरं धनुः ।
एभिर्दोषैर्विनिर्मुक्तं सर्वकार्यकरं स्मृतम् ॥ ४२॥ 1756
शार्ङ्गं पुनर्धनुर्दिव्यं विष्णोः परममायुधम् ।
वितस्तिसप्तसंमानं निर्मितं विश्वकर्मणा ॥ ४३॥ 1757
न च स्वर्गे न पाताले न भूमौ कस्यचित्करे ।
तद्धनुर्वशमायाति मुक्त्वैकं पुरुषोत्तमम् ॥ ४४॥ 1758
पौरुषेयं तु यच्छार्ङ्गं बहुवत्सरशोषितम् ।
वितस्तिभिः सार्धषड्भिर्मितं सर्वार्थसाधनम् ॥ ४५॥ 1759
प्रायो योग्यं धनुः शार्ङ्गं गजारोहाश्वसादिनाम् ।
रथिनां च पदातीनां वांशं चापं प्रकीर्तितम् ॥ ४६॥ 1760

## अथ गुणलक्षणानि

गुणानां लक्षणं वक्ष्ये यादृशं कारयेद्गुणम् ।
पट्टसूत्रो गुणः कार्यः कनिष्ठामानसंमितः ॥ ४७॥ 1761
धनुःप्रमाणो निःसन्धिः शुद्धैस्त्रिगुणतन्तुभिः ।
वर्तितः स्याद्गुणः श्लक्ष्णः सर्वकर्मसहो युधि ॥ ४८॥ 1762
अभावे पट्टसूत्रस्य हारिणी स्नायुरिष्यते ।
गुणार्थमथवा ग्राह्याः स्नायवो महिषीगवाम् ॥ ४९॥ 1763
तत्कालहतगोकर्णचर्मणा छागलेन वा ।
निर्लोम्ना तन्तुरूपेण कुर्याद्वा गुणमुत्तमम् ॥ ५० । 1764
पक्ववंशत्वचा कार्यो गुणस्तु स्थावरो दृढः ।
पट्टसूत्रेण संनद्धः सर्वकर्मसहो युधि ॥ ५१॥ 1765
प्राप्ते भाद्रपदे मासि त्वगर्कस्य प्रशस्यते ।
तस्यास्तत्र गुणः कार्यः पवित्रः स्थावरो दृढः ॥ ५२॥ 1766
वृत्तार्कसूत्रतन्तूनां हस्तास्त्वष्टादश स्मृताः ।
सद्वृत्तं त्रिगुणं कार्यं प्रमाणोऽयं गुणे स्मृतः ॥ ५३॥ 1767

## अथ शरलक्षणानि

अतः परं प्रवक्ष्यामि शराणां लक्षणं शुभम् ।
स्थूलं न चातिसूक्ष्मं च न पक्वं न कुभूमिजम् ।
हीनग्रन्थिविदीर्णं च वर्जयेदीदृशं शरम् ॥ ५४॥ 1768
पूर्णग्रन्थि सुपक्वं च पाण्डुरं समयाहृतम् ।
कठिनं वर्तुलं काण्डं गृह्णीयात्सुप्रदेशजम् ॥ ५५॥ 1769
द्वौ हस्तौ मुष्टिहीनौ तु दैर्घ्ये स्थौल्ये कनिष्ठिका ।
विधेया शरमानेषु यन्त्रेष्वाकर्षयेत्ततः ॥ ५६॥ 1770
कङ्कहंसशशादानां मत्स्यादक्रौञ्चकेकिनाम् ।
गृध्राणां कुक्कुटानां च पक्षा एतेषु शोभनाः ॥ ५७॥ 1771
एकैकस्य शरस्यैव चतुष्पक्षाणि योजयेत् ।
षडङ्गुलप्रमाणेन पक्षच्छेदं च कारयेत् ॥ ५८॥ 1772
दशाङ्गुलमिताः पक्षाः शार्ङ्गचापस्य मार्गणे ।
योज्या दृढाश्चतुःसंख्याः संनद्धाः स्नायुतन्तुभिः ॥ ५९॥ 1773
शराश्च त्रिविधा ज्ञेयाः स्त्री पुमांश्च नपुंसकः ।
अग्रे स्थूलो भवेन्नारी पश्चात्स्थूलो भवेत्पुमान् ॥ ६०॥ 1774
समं नपुंसकं ज्ञेयं तल्लक्ष्यार्थं प्रशस्यते ।
दूरापातं युवत्या च पुरुषो भेदयेद् दृढम् ॥ ६१॥ 1775

## अथ फललक्षणानि

फलं तु शुद्धलोहस्य सुधारं तीक्ष्णमक्षतम् ।
योजयेद्वज्रलेपेन शरे पक्षानुमानतः ॥ ६२॥ 1776
आरामुखं क्षुरप्रं च गोपुच्छं चार्धचन्द्रकम् ।
सूचिमुखं च भल्लं च वत्सदन्तं द्विभल्लकम् ॥ ६३॥ 1777
कर्णिकं काकतुण्डं च तथान्यान्यप्यनेकशः ।
फलानि देशभेदेषु भवन्ति बहुरूपतः ॥ ६४॥ 1778
आरामुखेन वै चर्म क्षुरप्रेण च कार्मुकम् ।
सूचीमुखेन कवचमर्धचन्द्रेण मस्तकम् ॥ ६५॥ 1779
भल्लेन हृदयं वेध्यं द्विभल्लेन गुणः शरः ।
लोहं च काकतुण्डेन लक्ष्यं गोपुच्छकेन च ॥ ६६॥ 1780
अन्यद्गोपुच्छकं ज्ञेयं शुद्धकाष्ठविनिर्मितम् ।
मुखे च लोहकण्टेन वेध्यं त्र्यङ्गुलसंमितम् ॥ ६७॥ 1781

## अथ फलपायनम्

फलस्य पायनं वक्ष्ये दिव्यौषधिविलेपनैः ।
येन दुर्भेद्यवर्माणि भेदयेत्तरुपर्णवत् ॥ ६८॥ 1782
पिप्पली सैन्धवं कुष्ठं गोमूत्रेण तु पेषयेत् ।
अनेन लेपयेच्छस्त्रं लिप्तं चाग्नौ प्रतापयेत् ॥ ६९॥ 1783
अविशीतमनाविद्धं पीतनष्टं तथौषधम् ।
ततो निर्वापितं तैले लोहं तत्र विशिष्यते ॥ ७०॥ 1784
पञ्चभिर्लवणैः पिष्टैर्मधुसिक्तैः ससर्षपैः ।
एभिः प्रलेपयेच्छस्त्रं लिप्तं चाग्नौ प्रतापयेत् ॥ ७१॥ 1785
शिखिग्रीवानुवर्णाभं तप्तपीतं तथौषधम् ।
ततस्तु विमलं तोयं पाययेच्छस्त्रमुत्तमम् ॥ ७२॥ 1786

## अथ नाराचनालीकौ

सर्वलोहास्तु ये बाणा नाराचास्ते प्रकीर्तिताः ।

पञ्चभिः पृथुलैः पक्षैर्युक्ताः सिद्ध्यन्ति कस्यचित् ॥ ७३ ॥ 1787
नालीका लघवो बाणा तलयन्त्रेण चोदिताः ।
अत्युच्चदूरपातेषु दुर्गयुद्धेषु ते मताः ॥ ७४ ॥ 1788

## अथ स्थानमुष्टयाकर्षणलक्षणानि

स्थानान्यष्टौ विधेयानि योजने भिन्नकर्मणाम् ।
मुष्टयः पञ्च समाख्याता व्यायाः पञ्च प्रकीर्तिता ॥ ७५ ॥ 1789

अग्रतो वामपादं च दक्षिणं जानु कुञ्चितम् ।
आलीढं तु प्रकर्तव्यं हस्तद्वयसविस्तरम् ॥ ७६ ॥ 1790
प्रत्यालीढं तु कर्तव्यं सव्यं चेवानुकुञ्चितम् ।
दक्षिणं च पुरस्तद्वद्दूरपाते विशिष्यते ॥ ७७ ॥ 1791
पादौ सुविस्तरौ कार्यौ समौ हस्तप्रमाणतः ।
विशाखस्थानकं ज्ञेयं कूटलक्ष्यस्य वेधने ॥ ७८ ॥ 1792
समपादे समौ पादौ निष्कम्पौ च सुसंगतौ ।
असमे च पुरो वामो हस्तमात्रे नतं वपुः ॥ ७९ ॥ 1793
आकुञ्चितोरू द्वौ यत्र जानुभ्यां धरणिं गतौ ।
दर्दुरक्रममित्याहुः स्थानकं दृढभेदने ॥ ८० ॥ 1794
सव्यं जानु गतं भूमौ दक्षिणं च सकुञ्चितम् ।
अग्रतो यत्र वातव्यं तं विद्याद्गरुडक्रमम् ॥ ८१ ॥ 1795
पद्मासनं प्रसिद्धं तु उपविश्य यथाक्रमम् ।
धन्विनां तत्तु विज्ञेयं स्थानकं शुभलक्षणम् ॥ ८२ ॥ 1796

## अथ गुणमुष्टयः

पताका वज्रमुष्टिश्च सिंहकर्णी तथैव च ।
मत्सरी काकतुण्डी च योजनीया यथाक्रमम् ॥ ८३ ॥ 1797
दीर्घा तु तर्जनी यत्र आश्रिताङ्गुष्ठमूलकम् ।
पताका सा च विज्ञेया नलिका दूरमोक्षणे ॥ ८४ ॥ 1798
तर्जनी मध्यमामध्यमङ्गुष्ठो विशते यदि ।
वज्रमुष्टिस्तु सा ज्ञेया स्थूले नाराचमोक्षणे ॥ ८५ ॥ 1799
अङ्गुष्ठनखमूले तु तर्जन्यग्रं सुसंस्थितम् ।
मत्सरी सा च विज्ञेया चित्रलक्ष्यस्य वेधने ॥ ८६ ॥ 1800
अङ्गुष्ठाग्रे तु तर्जन्या मुखं यत्र निवेशितम् ।
काकतुण्डी च विज्ञेया सूक्ष्मलक्ष्येषु योजिता ॥ ८७ ॥ 1801

## अथ धनुर्मुष्टिसंधानम्

संधानं त्रिविधं प्रोक्तमध ऊर्ध्वं समं तथा ।
योजयेत् त्रिप्रकारं हि कार्येष्वपि यथाक्रमम् ॥ ८८ ॥ 1802
अधश्च दूरपातित्वं समे लक्ष्यं सुनिश्चितम् ।
दृढस्फोटं प्रकुर्वीत ऊर्ध्वसंस्थानयोगतः ॥ ८९ ॥ 1803

## अथ व्यायाः

कैशिकः केशमूले चेच्छरः शृङ्गे च सात्त्विकः ।
श्रवणे वत्सकर्णश्च ग्रीवायां भरतो भवेत् ॥ ९० ॥ 1804
अंसके स्कन्धनामा च व्यायाः पञ्च प्रकीर्तिताः ।
कैशिकश्चित्रयुद्धेषु अधोलक्ष्येषु सात्त्विकः ॥ ९१ ॥ 1805
वत्सकर्णः स विज्ञेयो भरतो दृढभेदने ।
दृढभेदे च दूरे च स्कन्धनामानमुद्दिशेत् ॥ ९२ ॥ 1806

## अथ लक्ष्यम्

लक्ष्यं चतुर्विधं ज्ञेयं स्थिरं चैव चलं तथा ।
वेधयेत्रिप्रकारं तु स्थिरवेधी स उच्यते ॥ ९३ ॥ 1807
आत्मानं सुस्थिरं कृत्वा लक्ष्यं चैव स्थिरं बुधः ।
वेधयेत् त्रिप्रकारं तु स्थिरवेधी स उच्यते ॥ ९४ ॥ 1808
चलं तु वेधयेद्यस्तु आत्मना स्थिरसंस्थितः ।
चललक्ष्यं तु तत्प्रोक्तमाचार्येण सुधीमता ॥ ९५ ॥ 1809
धन्वी तु चलते यत्र स्थिरलक्ष्ये समाहितः ।
चलाचलं भवेत्तत्र अप्रमेयमनिन्दितम् ॥ ९६ ॥ 1810
उभावेव चलौ यत्र लक्ष्यं चापि धनुर्धरः ।
तद्विज्ञेयं द्वयचलं श्रमेणैव हि साध्यते ॥ ९७ ॥ 1811
श्रमेणास्खलितं लक्ष्यं दूरं च बहुभेदनम् ।
श्रमेण कठिना मुष्टिः शीघ्रसंधानमाप्यते ॥ ९८ ॥ 1812
श्रमेण चित्रयोधित्वं श्रमेण प्राप्यते जयः ।
तस्माद्गुरुसमक्षं हि श्रमः कार्यो विजानता ॥ ९९ ॥ 1813
प्रथमं वामहस्तेन यः श्रमं कुरुते नरः ।
तस्य चापक्रियासिद्धिरचिरादेव जायते ॥ १०० ॥ 1814
वामहस्ते तु संसिद्धे पश्चाद्दक्षिणमारभेत् ।
उभाभ्यां च श्रमं कुर्यान्नाराचैश्च शरैस्तथा ॥ १०१ ॥ 1815
वामेनैव श्रमं कुर्यात्सुसिद्धे दक्षिणे करे ।
विशाखेनासमेनैव तथा व्याये च कैशिके ॥ १०२ ॥ 1816
उदिते भास्करे लक्ष्यं पश्चिमायां निवेशयेत् ।
अपराह्णे च कर्तव्यं लक्ष्यं पूर्वदिगाश्रितम् ॥ १०३ ॥ 1817
उत्तरेण सदा कार्यं प्राणस्य न विरोधकम् ।
संग्रामेण विना कार्यं न लक्ष्यं दक्षिणामुखम् ॥ १०४ ॥ 1818
षष्टिधन्वन्तरे लक्ष्यं ज्येष्ठलक्ष्यं प्रकीर्तितम् ।
चत्वारिंशन्मध्यमं च विंशतिश्च कनिष्ठकम् ॥ १०५ ॥ 1819
शराणां कथितं ह्येतन्नाराचानामथोच्यते ।
चत्वारिंशच्च त्रिंशच्च षोडशैव भवेत्ततः ॥ १०६ ॥ 1820
चतुःशतैश्च काण्डानां यो हि लक्ष्यं विसर्जयेत् ।
सूर्योदये चास्तमये स ज्येष्ठो धन्विनां भवेत् ॥ १०७ ॥ 1821
त्रिशतैर्मध्यमश्चैव द्विशताभ्यां कनिष्ठकः ।
लक्ष्यं च पुरुषोन्मानं कुर्याच्चन्द्रकसंयुतम् ॥ १०८ ॥ 1822
ऊर्ध्ववेदी भवेज्ज्येष्ठो नाभिवेधी च मध्यमः ।
यः पादवेधी लक्ष्यस्य स कनिष्ठो मतो मया ॥ १०९ ॥ 1823

## अथानध्यायः

अष्टमी च अमावास्या वर्जनीया चतुर्दशी ।
पूर्णिमार्धदिनं यावन्निषिद्धा सर्वकर्मसु ॥ ११० ॥ 1824

अकाले गर्जिने देवे दुर्दिनं वाथवा भवेत् ।
पूर्वकाण्डहतं लक्ष्यमनध्यायं प्रचक्षते ॥१११॥ 1825
श्रमं च कुर्वतस्तत्र भुजंगो यदि दृश्यते ।
अथवा भज्यते चापं यदैव श्रमकर्मणि ॥११२॥ 1826
त्रुट्यते वा गुणो यत्र प्रथमे बाणमोक्षणे ।
श्रमं तत्र न कुर्वीत शस्त्रे मतिमतां वरः ॥११३॥ 1827

---

अथ श्रमक्रिया

क्रियाकलापान्वक्ष्यामि श्रमसाध्याञ्शुचिष्मताम् ।
येषां विज्ञानमात्रेण सिद्धिर्भवति नान्यथा ॥११४॥ 1828
प्रथमं चापमारोप्य चूलिकां बन्धयेत्ततः ।
स्थानकं तु ततः कृत्वा बाणोपरि करं न्यसेत् ॥११५॥ 1829
तुलनं धनुषश्चैव कर्तव्यं वामपाणिना ।
आदानं च ततः कृत्वा संधानं च ततः परम् ॥११६॥ 1830
सकृदाकृष्टचापेन भूमिवेधं तु कारयेत् ।
नमस्कुर्याच्छिवं विघ्नराजं गुरुधनुःशरान् ॥११७॥ 1831
याचितव्या गुरोराज्ञा बाणस्याकर्षणं प्रति ।
प्राणवायुं प्रयत्नेन बाणेन सह पूरयेत् ॥११८॥ 1832
कुम्भकेन स्थिरं कृत्वा हुंकारेण विसर्जयेत् ।
इत्यभ्यासक्रिया कार्या धन्विना सिद्धिमिच्छता ॥११९॥ 1833
षण्मासात्सिद्ध्यते मुष्टिः शराः संवत्सरेण तु ।
नाराचास्तस्य सिद्ध्यन्ति यस्य तुष्टो महेश्वरः ॥१२०॥ 1834
पुष्पवद्धारयेद् बाणं सर्पवत्पीडयेद्धनुः ।
धनवच्चिन्तयेल्लक्ष्यं यदीच्छेत्सिद्धिमात्मनः ॥१२१॥ 1835
क्रियामिच्छन्ति आचार्या दूरमिच्छन्ति भार्गवाः ।
राजानो दृष्टिमिच्छन्ति लक्ष्यमिच्छन्ति चेतरे ॥१२२॥ 1836
जनानां रञ्जनं येन लक्ष्यघातात्प्रजायते ।
हीनेनापीषुणा तस्मात्प्रशस्तं लक्ष्यवेधनम् ॥१२३॥ 1837
विशाखस्थानके स्थित्वा समसंधानमाचरेत् ।
गोपुच्छमुखबाणेन सिंहकर्ण्या च मुष्टिना ॥१२४॥ 1838
आकर्षेत्कैशिकव्याये न शिखां चालयेत्ततः ।
पूर्वापरौ समौ कार्यौ समांसौ निश्चलौ करौ ॥१२५॥ 1839
चक्षुषी स्पन्दयेन्नैव दृष्टिं लक्ष्ये नियोजयेत् ।
मुष्टिनाच्छादितं लक्ष्यं शरस्याग्रे नियोजयेत् ॥१२६॥ 1840
मनो दृष्टिगतं ज्ञात्वा ततः काण्डं विसर्जयेत् ।
स्खलत्येवं कदाचिन्न लक्ष्ये योधो जितश्रमः ॥१२७॥ 1841
आदानं चैव तूणीरात्संधानं कर्षणं तथा ।
क्षेपणं च त्वरायुक्तो बाणस्य कुरुते तु यः । 1842
नित्याभ्यासवशात्तस्य शीघ्रसंधानता भवेत् ॥१२८॥।
प्रत्यालीढे कृते स्थाने अधःसंधानमाचरेत् ।
मुष्ट्या पताकया बाणं स्त्रीचिह्नं दूरपातनम् ॥१२९॥ 1843
दर्दुरक्रममास्थाय ऊर्ध्वसंधानमाचरेत् ।
स्कन्धव्यायेन वज्रस्य मुष्ट्या पुंमार्गणेन च । 1844
अत्यन्तसौष्ठवाद्वाह्वोर्जायते दृढवेधिता ॥१३०॥।

सूचीमुखा मीनपुच्छा भ्रमरी च तृतीयका ।
शराणां गतयस्तिस्रः प्रशस्ताः कथिता बुधैः ॥१३१॥ 1845
सूचीमुखगतिस्तस्य सायकस्य प्रजायते ।
पत्रं विलोमितं यस्य अथवा हीनपत्रकम् ॥१३२॥ 1846
कर्कशेन तु चापेन यः कृष्टो हीनमुष्टिना ।
मत्स्यपुच्छा गतिस्तस्य सायकस्य प्रकीर्तिता ॥१३३॥ 1847
भ्रमरी कथिता ह्येषा विद्वद्भिः श्रमकर्मणि ।
ऋजुत्वेन विना याति क्षेप्यमाणस्तु सायकः ॥१३४॥ 1848
वामगा दक्षगा चैव ऊर्ध्वगाधोगमा तथा ।
चतस्रो गतयः प्रोक्ता बाणस्खलनहेतवः ॥१३५॥ 1849
कम्पते गुणमुष्टिस्तु मार्गणस्य हि पृष्ठतः ।
संमुखी स्याद्धनुर्मुष्टिस्तदा वामे गतिर्भवेत् ॥१३६॥ 1850
ग्रहणं शिथिलं यस्य ऋजुत्वेन विसर्जितम् ।
पार्श्वं तु दक्षिणं याति सायकस्य न संशयः ॥१३७॥ 1851
ऊर्ध्वं याति चापमुष्टिर्गुणमुष्टिरधो भवेत् ।
स मुक्तो मार्गणो लक्ष्याद्दूरं याति न संशयः ॥१३८॥ 1852
मोक्षणे चैव बाणस्य चापमुष्टिरधो भवेत् ।
गुणमुष्टिर्भवेदूर्ध्वं तदाधोगामिनी गतिः ॥१३९॥ 1853
लक्ष्यबाणाग्रदृष्टीनां संगतिस्तु यदा भवेत् ।
तदानीमुज्झितो बाणो लक्ष्यान्न स्खलति ध्रुवम् ॥१४०॥ 1854
निर्दोषः शब्दहीनश्च सममुष्टिद्वयोज्झितः ।
भिनत्ति दृढवेध्यानि सायको नास्ति संशयः ॥१४१॥ 1855
स्वाकृष्टस्तेजितो यश्च सुशुद्धो गाढमुक्तितः ।
नरनागाश्वकायेषु न स तिष्ठति मार्गणः ॥१४२॥ 1856
यस्य तृणसमा बाणा यस्येन्धनसमं धनुः ।
यस्य प्राणसमा मौर्वी स धन्वी धन्विनां वरः ॥१४३॥ 1857
अयश्चर्म घतश्चैव मृत्पिण्डं च चतुष्टयम् ।
यो भिनत्ति हि तस्येषुर्वज्रेणापि न धार्यते ॥१४४॥ 1858
सार्धाङ्गुलप्रमाणेन लोहपात्राणि कारयेत् ।
तानि भित्त्वैकबाणेन दृढघाती भवेन्नरः ॥१४५॥ 1859
चतुर्विंशतिचर्माणि भिनत्त्येकेषुणा नरः ।
तस्य बाणो गजेन्द्रस्य कायं निर्भिद्य गच्छति ॥१४६॥ 1860
भ्राम्यज्जले घटो वेद्ध्यश्चक्रे मृत्पिण्डकं तथा ।
भ्रमन्तं वेधयेद्यस्तु दृढभेदी स उच्यते ॥१४७॥ 1861
अयस्तु काकतुण्डेन चर्म आरामुखेन हि ।
मृत्पिण्डं च घटं चैव विध्येत्सूचिमुखेन हि ॥१४८॥ 1862
बाणभङ्गं करावर्तं काष्ठच्छेदनमेव च ।
बिन्दुकं गोलकयुगं यो वेत्ति स जयी भवेत् ॥१४९॥ 1863
लक्ष्यस्थाने धृतं काण्डं ससुखं छेदयेत्ततः ।
किंचिन्मुष्टिं विधाय स्वां तिर्यग्विफलिकेषुणा ॥१५०॥ 1864
संमुखं वा समायान्तं तिर्यक्छायं तमम्बरे ।
शरं शरेण यश्छिन्द्याद्बाणच्छेदी स जायते ॥१५१॥ 1865
काष्ठेऽश्वकेशं संयम्य तत्र बद्ध्वा वराटिकाम् ।

हस्तेन भ्राम्यमाणां च यो हन्ति स धनुर्धरः ॥ १५२ ॥ 1866
लक्ष्यस्थाने न्यसेत्काष्ठं सार्द्रं गोपुच्छसंनिभम् ।
यश्छिन्द्यात्तं क्षुरप्रेण काष्ठच्छेत्ता स जायते ॥ १५३ ॥ 1867
लक्ष्ये बिन्दुं न्यसेच्छुभ्रं शुभ्रबन्धूकपुष्पवत् ।
हन्ति तं बिन्दुकं यस्तु चित्रयोधी स जायते ॥ १५४ ॥ 1868
काष्ठगोलयुगं क्षिप्तं दूरमूर्ध्वपुरःस्थितैः ।
अप्राप्तधारं पृष्ठेन गच्छेत्पुच्छमुखेन हि ॥ १५५ ॥ 1869
यो हन्ति शरयुग्मेन शीघ्रसंधानयोगतः ।
स स्याद्धनुर्भृतां श्रेष्ठः पूजितः सर्वपार्थिवैः ॥ १५६ ॥ 1870
रथस्थेन गजस्थेन हयस्थेन च पत्तिना ।
धावता वै श्रमः कार्यो लक्ष्यं हन्तुं सुनिश्चितम् ॥ १५७ ॥ 1871
लक्ष्यस्थाने न्यसेत्कांस्यपात्रं हस्तद्वयान्तरे ।
ताडयेच्छर्कराभिस्तच्छब्दः संजायते यथा ॥ १५८ ॥ 1872
यत्रैवोत्पद्यते शब्दस्तं सम्यक्तत्र चिन्तयेत् ।
कर्णेन्द्रियमनोयोगाल्लक्ष्यंनिश्चयतां नयेत् ॥ १५९ ॥ 1873
पुनः शर्करया तच्च ताडयेच्छब्दहेतवे ।
पुनर्निश्चयतां नेयं शब्दस्थानानुसारतः ॥ १६० ॥ 1874
ततः किंचित्कृतं दूरे नित्यं नित्यं विधानतः ।
लक्ष्यं समभ्यसेद्धवान्ते शब्दव्यधनहेतवे ॥ १६१ ॥ 1875
ततो बाणेन हन्यात्तदवधानेन तीक्ष्णधीः ।
एतच्च दुष्करं कर्म भाग्यैः कस्यापि सिद्धयति ॥ १६२ ॥ 1876
एवं श्रमविधिं कुर्याद्यावत्सिद्धिः प्रजायते ।
श्रमे सिद्धे च वर्षासु नैव ग्राह्यं धनुः करे ॥ १६३ ॥ 1877
पूर्वाभ्यासस्य शस्त्राणामविस्मरणहेतवे ।
मासद्वयं श्रमं कुर्यात्प्रतिवर्षं शरदृतौ ॥ १६४ ॥ 1878
जाते वाश्वयुजे मासि नक्मीदेवतादिने ।
पूजयेदीश्वरं चण्डीं गुरुं शस्त्राणि वाजिनः ॥ १६५ ॥ 1879
विप्रेभ्यो दक्षिणां दत्त्वा कुमारी भोजयेत्ततः ।
देव्यै पशुवलिं दत्त्वा हृष्टो वादित्रमङ्गलैः ॥ १६६ ॥ 1880
ततस्तु साधयेन्मन्त्रान्वेदोक्तांश्चागमोदितान् ।
अस्त्राणां कर्मसिद्ध्यर्थं जपहोमविधानतः ॥ १६७ ॥ 1881
ब्राह्मं नारायणं शैवमैन्द्रं वायव्यवारुणे ।
आग्नेयं चापरास्त्राणि गुरुदत्तानि साधयेत् ॥ १६८ ॥ 1882
मनोवाक्कर्मभिर्भाव्यं लब्धास्त्रेण शुचिष्मता ।
अपात्रमसमर्थं च घ्नत्यस्त्राणि कुपूरुषम् ॥ १६९ ॥ 1883
प्रयोगं चोपसंहारं यो वेत्ति स धनुर्धरः ।
सामान्ये कर्मणि प्राज्ञो नैवास्त्राणि प्रयोजयेत् ॥ १७० ॥ 1884
हस्तार्के लाङ्गलीकन्दं गृहीत्वा तस्य लेपतः ।
शूरस्यापि रणे पुंसो दर्पं हरति सत्वरः ॥ १७१ ॥ 1885
गृहीतं योगनक्षत्रैरपामार्गस्य मूलकम् ।
लेपमात्रेण वीराणां सर्वशस्त्रनिवारणम् ॥ १७२ ॥ 1886
अधःपुष्पी शङ्खपुष्पी लज्जालुर्गिरिकर्णिका ।
नीलिनी सहदेवा च पुत्रमार्जारिका तथा ॥ १७३ ॥ 1887
विष्णुक्रान्ता च सर्वासां जटा ग्राह्या रवेर्दिने ।
बद्धा भुजे विलेपाद्वा काये शस्त्रौघवारिका ॥ १७४ ॥ 1888
सर्पव्याघ्रादिसत्त्वानां भूतादीनां न जायते ।
भीतिस्तस्य स्थिता यस्य मातरोऽष्टौ शरीरके ॥ १७५ ॥ 1889
गृहीतं हस्तनक्षत्रे चूर्णं छुच्छुन्दरीभवम् ।
तत्प्रभावाद्गजः पुंसः संमुखो नैति निश्चितम् ॥ १७६ ॥ 1890
छुच्छुन्दरी श्रीफलपुष्पचूर्णै-
रालिप्तगात्रस्य नरस्य दूरात् ।
आघ्राय गन्धं द्विरदोऽतिमत्तो
मदं त्यजेत्केसरिणो यथोग्रम् ॥ १७७ ॥ 1891
श्वेताद्रिकर्णिकामूलं पाणिस्थं वारयेद्गजम् ।
श्वेतकण्टारिकामूलं व्याघ्रादीनां भयं हरेत् ॥ १७८ ॥ 1892
पुष्यार्कोत्पाटिते मूले पाठाया मुखसंस्थिते ।
देहे स्फुटति नो तीक्ष्णं मण्डलाग्रं रणे नृणाम् ॥ १७९ ॥ 1893
गन्धार्या उत्तरं मूलं मुखस्थं संमुखागतम् ।
शस्त्रौघं वारयत्येव पुष्यार्के विधिना धृतम् ॥ १८० ॥ 1894
शुभ्रायाः शरपुङ्खाया जटानीलीजटाथवा ।
भुजे शिरसि वक्त्रे वा स्थिता शस्त्रनिवारिका । 1895
भूपाहिचौरभीतिघ्नी गृहीता पुष्यभास्करे ॥ १८१ । ।
प्रथमं क्रियते स्नानं शुक्लवस्त्रावृतो भवेत् ।
मङ्गल्यगीतसंयुक्तो देवविप्रांश्च पूजयेत् ॥ १८२ ॥ 1896
क्षेत्रपालस्य नाम्ना च बलिं दद्याद्दिशो दश ।
शस्त्राणि चापि संपूज्य रक्षामन्त्रं स्मरेत्ततः ॥ १८३ ॥ 1897
ॐ शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके ।
घण्टास्वनेन नः पाहि चापज्यानिःस्वनेन च ॥ १८४ ॥ 1898
प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे ।
भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि ॥ १८५ ॥ 1899
सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ते ।
यानि चात्यन्तघोराणि तै रक्षास्मांस्तथा भुवम् ॥ १८६ ॥ 1900
खड्गशूलगदादीनि यानि चास्त्राणि तेऽम्बिके ।
करपल्लवसङ्गीनि तैरस्मान् रक्ष सर्वतः ॥ १८७ ॥ 1901
दिव्यौषधीनां लेपं च रक्षाबन्धं च कारयेत् ।
किंचिद् भुक्त्वा च पीत्वा च ततः संनाहमाचरेत् ॥ १८८ ॥ 1902
सेनापतिं गजारोहानन्यांश्च सुभटांस्तथा ।
मुख्यानन्यानपि धनैर्वस्त्रैश्च परितोषयेत् ॥ १८९ ॥ 1903
पूर्वं सारथिमारोप्य रथे सज्जेत्ततः स्वयम् ।
योजयेद्वाजिनः शुद्धान्सुसंतुष्टाञ्जितश्रमान् ॥ १९० ॥ 1904
रथे च धारयेद् भद्रं कार्मुकाणां चतुष्टयम् ।
चतुःशतानि बाणानां तूणीरे च प्रयोजयेत् ॥ १९१ ॥ 1905
खड्गं चर्म गदां शक्तिं परिघं मुद्गरं तथा ।
नाराचं परशुं कुन्तं पट्टिशादींश्च धारयेत् ॥ १९२ ॥ 1906
न रथा न गजा यस्य सोऽश्वमेव समारुहेत् ।
कटिबद्धैकतूणीरः खड्गशक्तिधनुर्युतः ॥ १९३ ॥ 1907

ततोर्जुनस्य नामानि विष्णुस्मरणपूर्वकम् ।
जपेत्ततः प्रतिष्ठेत चतुरङ्गबलैर्युतः ॥ १९४ ॥ 1908
लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ।
येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ १९५ ॥ 1909
अर्जुनः फाल्गुनः पार्थः किरीटी श्वेतवाहनः ।
बीभत्सुर्विजयी कृष्णः सव्यसाची धनंजयः ॥ १९६ ॥ 1910
खं तथा स्वरवस्विन्दुनेत्रैरक्षौहिणी मता ।
अक्षौहिण्यां संप्रदिष्टा रथानां वर्मधारिणाम् । 1911
संख्या गणिततत्त्वज्ञैः सहस्राण्येकविंशतिः ॥ १९७ । ।
उपर्यष्टौ शतान्याहुस्तथा भूयश्च सप्ततिः ।
गजानां तु परीमाणमेतदेव विनिर्दिशेत् ॥ १९८ ॥ 1912
ज्ञेयं लक्षं पदातीनां सहस्राणि तथा नव ।
शतानि त्रीणि पञ्चाशच्छूराणां शस्त्रधारिणाम् ॥ १९९ ॥ 1913
पञ्चषष्टिसहस्राणि तथाश्वानां शतानि च ।
दशोत्तराणि षट् प्राहुः संख्यातत्त्वविदो जनाः ॥ २०० ॥ 1914
खद्वयं निधिवेदाक्षिचन्द्राक्ष्यग्निहिमांशुभिः ।
महाक्षौहिणिका प्रोक्ता संख्या गणितकोविदैः ॥ २०१ ॥ 1915
कोटयस्त्रयोदश प्रोक्ता लक्षाणामेकविंशतिः ।
चतुर्विंशत्सहस्राणि तथा नवशतानि च ॥ २०२ ॥ 1916
महाक्षौहिणिकां प्राहुरिमां तत्त्वविदो जनाः ।
महाक्षौहिणिकायां तु रथाः कोटिमिताः स्मृताः । 1917
सप्तत्रिंशच्च लक्षाणि गीयन्ते तत्त्वभेदिभिः ॥ २०३ । ।
द्वादशैव सहस्राणि चत्वार्येव शतानि च ।
प्रोक्तानि नवतिस्तद्वदेवमेव मतंगजाः ॥ २०४ ॥ 1918
अश्वाश्चतुष्कोटिमिता लक्षाण्येकादशैव च ।
सप्तत्रिंशत्सहस्राणि तथा शतचतुष्टयम् ॥ २०५ ॥ 1919
सप्ततिश्चैव संख्याताः प्रोच्यन्ते पत्तयस्ततः ।
षट्कोटयोऽशीतिलक्षाणि पञ्चाधिकमितानि च ॥ २०६ ॥ 1920
द्विषष्टि च सहस्राणि तथा शतचतुष्टयम् ।
पञ्चाशदिति संख्याता महाक्षौहिणिका बुधैः ॥ २०७ ॥ 1921
मुखे रथा गजाः पृष्ठे तत्पृष्ठे च पदातयः ।
पार्श्वयोश्च हयाः कार्या व्यूहस्यायं विधिः स्मृतः ॥ २०८ ॥ 1922

अर्धचन्द्रं च चक्रं च शकटं मकरं तथा ।
कमलं श्रेणिकां गुल्मं व्यूहानेवं प्रकल्पयेत् ॥ २०९ ॥ 1923
ये राजपुत्राः सामन्ता आप्ताः सेवकजातयः ।
तान्सर्वानात्मनः पार्श्वे रक्षायै स्थापयेन्नृपः ॥ २१० ॥ 1924
यस्मिन्कुले यः पुरुषः प्रधानः
स सर्वयत्नेन हि रक्षणीयः ।
तस्मिन्विनष्टे किल सारभूते
न नाभिभङ्गे ह्यरका वहन्ति ॥ २११ ॥ 1925
क्षत्रसारभृतं शूरं शस्त्रज्ञमनुरागि चेत् ।
अपि स्वल्पं श्रिये सैन्यं वृथेयं मुण्डमण्डली ॥ २१२ ॥ 1926
अपि पञ्चशतं शूरा मृद्नन्ति महतीं चमूम् ।
अथवा पञ्च षट् सप्त विजयन्तेऽनिवर्तिनः ॥ २१३ ॥ 1927
धनुःसंगतिसंशुद्धा वाजिनो मुखदुर्बलाः ।
आकर्णपलिता योधाः संग्रामे जयवादिनः ॥ २१४ ॥ 1928
परस्परानुरक्ता ये योधाः शार्ङ्गधनुर्धराः ।
युद्धज्ञास्तुरगारूढास्ते जयन्ति रणे रिपून् ॥ २१५ ॥ 1929
एकः कापुरुषो दीर्णो दारयेन्महतीं चमूम् ।
तं दीर्णमनु दीर्यन्ते योधाः शूरतमा अपि ॥ २१६ ॥ 1930
दुर्निवारतरा चैव प्रभग्ना महती चमूः ।
अपामिव महावेगत्रस्ता मृगगणा इव ॥ २१७ ॥ 1931
यस्तु भग्नेषु सैन्येषु विद्रुतेषु निवर्तते ।
पदे पदेऽश्वमेधस्य लभते फलमक्षयम् ॥ २१८ ॥ 1932
द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥ २१९ ॥ 1933
यत्र यत्र हतः शूरः शत्रुभिः परिवेष्टितः ।
अक्षयं लभते लोकं यदि क्लीबं न भाषते ॥ २२० ॥ 1934
मूर्छितं नैव विकलं नाशस्त्रं नान्ययोधिनम् ।
पलायमानं शरणं गतं चैव न हिंसयेत् ॥ २२१ ॥ 1935
भीरुः पलायमानोऽपि नान्वेष्टव्यो बलीयसा ।
कदाचिच्छूरतां याति मरणे कृतनिश्चयः ॥ २२२ ॥ 1936
संभृत्य महतीं सेनां चतुरङ्गां महीपतिः ।
व्यूहयित्वाग्रतः शूरान्स्थापयेज्जयलिप्सया ॥ २२३ ॥ 1937
अल्पायां वा महत्यां वा सेनायामिति निश्चयः ।
हर्षो योधगणस्यैको जयलक्षणमुच्यते ॥ २२४ ॥ 1938
अन्वेतं वायवो यान्ति पृष्ठे भानुर्वयांसि च ।
अनुप्लवन्ते मेघाश्च यस्य तस्य रणे जयः ॥ २२५ ॥ 1939
अपूर्णे नैव मर्तव्यं संपूर्णे नैव जीवति ।
तस्माद्धैर्यं विधातव्यं हन्तव्या परवाहिनी ॥ २२६ ॥ 1940
जिते लक्ष्मीर्मृते स्वर्गः कीर्तिश्च धरणीतले ।
तस्माद्धैर्यं विधातव्यं हन्तव्या परवाहिनी ॥ २२७ ॥ 1941
एतम् शिवधनुर्वेदस्य भगवतो व्यासस्य च ।

---

Encoded and proofread by Ravi Mahadevappa ravi@ece.neu.edu
(Assisted by Avinash Sathaye sohum@ms.uky.edu)

The numerals correspond to English translation available at
http://www.atarn.org/india/dhanurveda_eng.htm

